## ६६ क्षोणिवरण्ड

क्षोण्याः पृथिव्याः वरण्डः अभ्यन्तरः । अन्तराधारकः इति यावत् ॥

## ६७ प्रमदवरण्ड

प्रमदसंमदौ हर्षे ( ३. ३. ६८ ) प्रमदानां हर्षाणां वरण्डः समूहः । तद्रूपः ।

## ६८ श्लिट्प्रत्यण्डस्नुप्रत्यण्ड

श्लिष आलिङ्गने ( ४. ७७ ) क्विप् । श्लिष्यन्ति ते श्लिषः । तादृशाः प्रत्यण्डाः गन्धकीटाः येषु तादृशाः ये स्नवः सानवः तेषु प्रत्यण्डाः गन्धमृगाः यस्य ।

प्रत्यण्डो गन्धकीटेऽपि तथा गन्धमृगे स्मृतः । ( ४५-२८ )

इति विश्वः ।

स्नुः प्रस्थः सानुरस्त्रियाम् । ( ६४२ )

इत्यमरः ॥

## ६९ प्रणड्वरण्ड

प्रकर्षेण नश्यति इति प्रणट् वरण्डः मुखरोगः यस्मात् ॥

## ७० प्रशितवरण्ड

शिञ् निशाने ( ५. ३ ) प्रकर्षेण शितः तीक्ष्णीकृतः वरण्डः खड्गः यस्य ।

## ७१ त्रातवरण्ड

त्रैङ् पालने ( १. १०१४ ) त्राताः रक्षिताः वरण्डाः सारिकाः येन ।

## ७२ प्रेष्ठवरण्ड

अतिशयेन प्रियाः प्रेष्ठाः । अतिशायने तमबिष्ठनौ ( ५. ३. ५५ ) इति इष्ठनि प्रियस्थिर ( ६. ४. १५७ ) इति प्रादेशः । वरण्डाः धेनवः यस्य ।

वरण्डोऽभ्यन्तरे वेदौ सन्दोहमुखरोगयोः । ( ४५-२७ )

इति विश्वः ।

वरण्डा सारिका वर्तिखङ्गधेनुषु कथ्यते । ( ४३-३६ )

इति मेदिनी ॥

## ७३ स्थेष्ठतरण्ड

स्थेष्ठाः अतिशयेन स्थिराः तरण्डाः भद्रवस्तूनि यस्मात् ।

तरण्डो बडिशीसूत्रे भद्रवस्तुनि भेलके । ( ४५-२७ )

इति विश्वः ॥

## ७४ म्लाशितफण्ड

टुम्लाश्ट दीप्तौ । म्लाशितः शोभितः फण्डः उदरं यस्य ॥

## ७५ व्यापत्तटिनीप्रौढतरण्ड

विशिष्टा आपत् व्यापत् । सैव तटिनी नदी । तस्यां प्रौढः उत्कृष्टः तरण्डः नौः ।

## ७६ प्रहतवितण्ड

प्रहता दूरीकृता वितण्डा कथाविशेषः येन ॥

## ७७ न्यस्तवितण्ड

न्यस्ता दूरीकृता वितण्डा करवीरी येन ॥

## ७८ ग्रस्तवितण्ड

ग्रसु अदने ( १. ६६१ ) ग्रस्ता भक्षिता वितण्डा शाकविशेषः येन।

## ७९ ग्रासितवितण्ड

ग्रस ग्रहणे ( १०. २०६ ) चुरादावदन्तः । ग्रसिता गृहीता दिगम्बरत्वात् शयनोपवेशनार्थं वितण्डा शिला येन ।

## ८० श्रिण्मार्तण्डश्लिण्मार्तण्ड

श्रिषु श्लिषु दाहे (१. ७३३, ७३४) क्विप्। श्रिट् दाहकः यः मार्तण्डः सूर्यः तस्यापि श्लिट् दाहकः मार्तण्डः क्रोडः यस्य।

मार्तण्डस्तपने क्रोडे। (४५-२८)

इति विश्वः॥

## ८१ प्रभुभेरुण्ड

प्रभूणां राज्ञाम्। अर्थात् पापीनाम्। भेरुण्डः भीमदर्शनः॥

## ८२ स्तुद्भेरुण्ड

स्तौति इति स्तुत्। स्तोत्री भेरुण्डा देवताविशेषः यम्॥

## ८३ प्रुड्भेरुण्ड

प्रुष स्नेहने (६. ५५) क्विप्। प्रुष्णाति इति प्रुट्। स्नेहयुक्। भेरुण्डा यक्षिणीभेदः यस्मिन्।

भेरुण्डो भीमदर्शने।

भेरुण्डा देवताभेदे यक्षिण्यामपि चेष्यते। (४५-३२)

इति विश्वः॥

## ८४ क्षितिवारुण्ड

क्षितौ निवासे वारुण्डः सेकपात्रम्॥

## ८५ च्युद्वारुण्ड

च्युङ् गतौ (१. १००४) च्यवेते तौ च्युतौ वारुण्डौ दृक्कर्णमले यस्य।

वारुण्डः सेकपात्रे स्यान् मले दृक्कर्णयोरपि। (४५-३३)

इति विश्वः॥

## ८६ प्रियजलरुण्ड

प्रियाः हृद्याः जलरुण्डाः सर्पाः यस्य। प्रीञ् तर्पणे कान्तौ वा (६. २) इगुपध (३. १. १३५) इति कः।

प्रियो धवे च हृद्ये च वृद्धिनामौषधेऽपि च। (११५-६)

इति विश्वः॥

## ८७ क्षितजलरुण्ड

क्षिणु हिंसायाम् (८. ४) क्तः। अनुनासिकलोपः। क्षिताः नाशिताः जलरुण्डाः पयोरेणवः येन॥

## ८८ स्वृतजलरुण्डप्रभरितकुण्डप्रपिब

ऋ गतौ (३. १६) सुतरां ऋताः गताः ये जलरुण्डाः जलप्रवाहाः तैः। भृ भरणे (६. २१) प्रकर्षेण भरितानि पूर्णानि यानि कुण्डानि पिठराः तेषु प्रकर्षेण पिबति। सुप्सुपा (२. १. ४) इति समासः। पाघ्रा (३. १. १३७) इति शः। पिबादेशः (७. ३. ७८)

जलरुण्डो जलावर्ते पयोरेणौ भुजङ्गमे। (४६-३६)

इति विश्वः॥

## ८९ सुकुण्ड

सुष्ठु कुण्डानि देवजलाशयाः यस्य॥

## ९० व्युदसितकुण्ड

अस गत्यादिषु (१. ६३४) व्युत्पूर्वः। विशेषेण उदसिताः दूरीकृताः कुण्डाः जारजाः येन॥

## ९१ प्रवरितकुण्ड

वृ भरणे (६. २०) प्रकर्षेण वरितानि भृतानि कुण्डानि अग्न्यालयाः येन॥

## ९२ द्रूभृतकुण्डप्रद

द्रूः हिरण्यम्। तेन भृतानि पूर्णानि यानि कुण्डानि मानभेदाः तेषां प्रदः दाता। आतश्चोपसर्गे (३. १. १३६) इति कः।

कुण्डमग्न्यालये मानभेदे देवजलाशये।

कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान्।

पिठरे तु न ना। (४०-४, ५)

इति मेदिनी ।

कुण्डं देवजलाधारे पिटके च कमण्डलौ ।

कुण्डी कुण्डः स्मृतो जारात् पतिवत्नीसुते पुमान् । (४४-११)

इति विश्वश्च ॥

## १३ वरशुण्ड

वराः उत्कृष्टाः शुण्डाः जलहस्तिन्यः यस्मात् ॥

## १४ प्रदलितमुण्डप्रमथनरौद्रप्रक्षरशुण्ड-भ्रमिधरघुण्डप्रसभसशुण्डद्विपवरमुण्ड

प्रकर्षेण दलितानि । मुण्डः दैत्यः । तद्वत् प्रमथ्नन्ति ते प्रमथनाः । नन्द्यादित्वात् (३. १. १३४) ल्युः । तादृशानाम् । प्रकर्षेण क्षरन्ति ते प्रक्षराः । पचाद्यच् (३. १. १३४) शुण्डाः मदनिर्भराः । तादृशानाम् । भ्रमयः भ्रमणानि । तेषां धराः धारकाः घुण्डाः भ्रमराः येषु तादृशानाम् । प्रकर्षेण भाभिः सहिताः प्रसभाः । तादृशानाम् । शुण्डाभिः सहिताः सशुण्डाः । तादृशानाम् । द्विपेषु हस्तिषु वराः श्रेष्ठाः । तेषां मुण्डानि येन ॥

## १५ स्मितचामुण्ड

ष्मिङ् ईषद्धसने (१. ६६६) स्मिता ईषद्धास्ययुक्ता चामुण्डा देवी यस्मिन् ॥

## १६ त्याजितशुण्ड

त्याजिता त्यागविषयीकारिता शुण्डा मदिरा येन ॥

## १७ प्रीणितशुण्ड

प्रीञ् तर्पणे (१०. २९३) धूञ्प्रीञोर्नुग्वक्तव्यः (वा. ७. ३. ३७) इति नुक् । प्रीणिताः तोषिताः धनदानादिना शुण्डाः वारयोषितः । अर्थात् स्ववेंश्याः उर्वशीमुखाः । येन ॥

## १८ घ्रापितशुण्ड

घ्रापिता घ्राणविषयीकारिता शुण्डा नलिनी येन ।

शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोः ।
नलिन्यां वारयोषायां शुण्डस्तु मदनिर्झरे । ( ४५-२४ )

इति विश्वः ।

मुण्डो दैत्यान्तरे राहौ मूर्धमुण्डितयोरपि । ( ४४-१७ )

इति विश्वः ॥

## ९९ क्षितपरतुण्ड

क्षिणु हिंसायाम् (८. ४) क्षितानि हतानि परेषां शत्रूणां तुण्डानि मुखानि येन ।

वक्त्रास्ये वदनं तुण्डम् । ( १२५१ )

इत्यमरः ॥

## १०० व्युपहतमुण्ड

विशेषेण उपहतः ताडितः मुण्डः राहुः येन ॥

## १०१ व्युपरतहुण्ड

विशेषेण उपरता नष्टा हुण्डा संघातः यस्मात् । हुड संघाते (६. १०२) गुरोश्च हलः ( ३. ३. १०३ ) इति अप्रत्ययः । स्त्र्यधिकारात् यप् ॥

## १०२ द्रवसितमुण्ड

द्रवस् परितापपरिचरणयोः । द्रवसिताः परिचरणं प्राप्ताः मुण्डाः सन्यासिनः यस्मिन् ॥

## १०३ प्रोन्निद्राण

प्रकर्षेण उन्निद्राणः जागरूकः ॥

## १०४ क्षिप्रविमान

क्षिप्रः शीघ्रगामी विमानः यस्य ।

व्योमयानं विमानोऽस्त्री । ( ६५ )

इत्यमरः ॥

## १०५ छर्पितयान

छृप संदीपने (१०. २७७) छर्पितं संदीप्तं यानं गतिः यस्य ।
  यानं गतौ वाहने च । (८५-७)
इति विश्वः ॥

## १०६ ग्रावशयान

ग्राव्णि पर्वते
  ग्रावाणौ शैलपाषाणौ (२५४६)
इत्यमरः । शेते असौ शयानः ॥

## १०७ क्ष्मायितहान

क्ष्मायी विधूनने (१. ५१५) णिजन्तः । क्ष्मायितं विधूनितं हानं हानिः येन ॥

## १०८ ब्रह्मसमान

ब्रह्म शुद्धं चैतन्यम् । तेन समानः समः ॥

## १०९ प्रमासमान

प्रमया यथार्थज्ञानेन समानः एकः अद्वितीयः ॥

## ११० व्योमसमान

व्योम आकाशः । तद्वत् समानः सन् नित्यत्वादिना ।
  ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि ।
  ऋत्विग्योगभिदोर्विप्रे (८९-९६, ९७)
इति मेदिनी ।
  समानाः सत्समैके स्युः (२५८९)
इत्यमरः ॥

## १११ त्रिगुणनिदान

त्रयो गुणाः यस्मिन् निदानं आदिकारणम् । त्रयाणां गुणानां समाहारः त्रिगुणम् । तस्य निदानं इति वा ॥

## ११२ प्रलयितदान

लीङ् श्लेषणे (४. ३१) णिजन्तः। उपसर्गवशान्नाशेऽर्थे वृत्तिः। प्रलयितं नाशितं दानं खण्डनं येन। दो अवखण्डने (४. ४०) ल्युट्॥

## ११३ प्रायितदान

प्रीङ् प्रीतौ (४. ३६) णिजन्तः। प्रायितं प्रीतिविषयीकारितं दानं वितरणं येन॥

## ११४ ज्ञप्तिनिधान

ज्ञप्तिः ज्ञानम्। तस्याः निधानं निधिः॥

## ११५ द्रुमसन्तान

द्रुमेषु वृक्षेषु सन्तानः कल्पवृक्षः॥

## ११६ त्रिजगत्प्राण

त्रिभ्यो जायन्ते इति त्रिजाः ब्रह्मादयः। पञ्चम्यामजातौ (३. २. ९८) इति जनेर्डः। तान् गच्छन्ति ते त्रिजगतः। क्विपि गमः क्वौ (६. ४. ४०) इत्यनुनासिकलोपे तुक्। ईदृशाः प्राणाः यस्य। तदात्मकत्वात्॥

## ११७ स्तकदुपमान

स्तक प्रतिघाते (१. ८१६)। स्तकन्ति प्रतिघातं प्राप्नुवन्ति उपमानानि सादृश्यानि यस्य॥

## ११८ स्वरदनुमान

स्वृ शब्दोपतापयोः (१. ९७१) स्वरत् शब्दायमानं अनुमानं यस्य॥

## ११९ स्मयगीर्वाणश्रुतियुतगान

स्मयाः गायनाः ये गीर्वाणाः देवाः तेषां श्रुतिभिः स्वरारम्भकावयवैः शब्दविशेषैः युतं गानं गीतं यस्य। श्रुतिनिरूपणं सङ्गीतशास्त्रे।

प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः।
स श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा।

इति॥

## १२० ध्वनितपुराण

ध्वनितानि कथितानि पुराणानि येन ।

## १२१ प्रथितपुराण

प्रथ प्रख्याने (१. ८०२, १०. १६) कर्तरि क्तः । प्रथितः विख्यातः । पुराणः अनादिः । कर्मधारयः ॥

## १२२ प्रसिताधान

प्रकर्षेण सितं श्वेतं आधानं स्थानं यस्य । कैलासवासित्वात् ॥

## १२३ प्रसिताधान

षिञ् बन्धने (५. २, ६. ५) प्रकर्षेण सितं बद्धं अग्न्याधानादि येन ॥

## १२४ त्रिविधज्ञान

त्रिविधं भूतभविष्यद्वर्तमानवस्तुविषयकं ज्ञानं यस्य ॥

## १२५ क्रथिताज्ञान

क्रथ हिंसायाम् (१. ८३८) क्रथितं नाशितं अज्ञानं अविद्या येन । लोकानां इति भावः ॥

## १२६ स्मृतविज्ञान

स्मृतं स्मृतिविषयीकृतं मन्वादिभिः विज्ञानं शिल्पादिविषयकं ज्ञानं यस्य । यद्वा स्मृतानि स्मृतयः । तेषु विज्ञानं यस्य ॥

## १२७ स्तरितग्लान

स्तृञ् आच्छादने (६. १४) स्तरितं आच्छादितं ग्लानं ग्लानिः येन ॥

## १२८ स्फुटमम्लान

स्फुटं प्रव्यक्तं अम्लानः हृष्टः ॥

## १२९ स्मितपरिधान

स्मिङ् अनादरे ( १०. ३७ ) स्मितं अनादृतं परिधानं आच्छादनं येन।

अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके। ( १३०७ )

इत्यमरः॥

## १३० स्फुटदुद्यान

स्फुट विकसने ( १. २७६, ६. ८० ) स्फुटन्ति विकासं प्राप्नुवन्ति उद्यानानि उपवनानि यस्य।

पुमानाक्रीड उद्यानम् (६५४)

इत्यमरः॥

## १३१ म्रदितविगान

म्रदू मर्दने ( १. ८०४ ) म्रदितं मर्दनविषयीभूतं विगानं निन्दा यस्मात्॥

## १३२ त्रिपथपुनान

त्रयाणां पथां समाहारः त्रिपथम्। तस्य। पुनीते असौ पुनानः। शेषषष्ठ्या समासः॥

## १३३ द्विषल्लुनान

द्विषतां शत्रूणाम्। लुनीते असौ लुनानः॥

## १३४ त्रिपुरधुनान।

तिसृणां पुरां समाहारः त्रिपुरम्। ऋक्पूर् ( ५. ४. ७४ ) इत्यप्। तस्य धुनानः। धूञ् कम्पने ( ५. ६, ९. १७, १०. २६२ ) प्वादित्वात् ह्रस्वः ( ७. ३. ८० )। कम्पनकारी॥

## १३५ स्वभूदधान

स्वभुवः ब्रह्मणः। धत्ते असौ दधानः धारकः॥

## १३६ स्वर्गददान

स्वर्गस्य। दत्ते असौ ददानः दाता ॥

## १३७ ब्रह्मोद्यान

ब्रह्मणां वेदानां उद्यानं निस्सरणं यस्मात् ॥

## १३८ ब्रह्मोद्यान

ब्रह्मणां तपसां उद्यानम्। उद्देश्यं इति यावत्।
स्यादुद्यानं निस्सरणे वनभेदे प्रयोजने। (२५६८)
इत्यमरः ॥

## १३९ ब्रह्मोत्थान

ब्रह्मणां विप्राणां उत्थानं तन्त्रम्। हेतुः इति यावत्।
उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे।
अङ्गणोद्गमहर्षेषु मलवेगे च कीर्तितम् ॥ (६०-५८)
इति विश्वः।
तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे।
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे।
श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके ॥ (१२५-४०, ४१)
इति मेदिनी ॥

## १४० ब्रह्मोत्थान

ब्रह्मणः प्रजापतेः उत्थानं उद्यमः यस्मात् ॥

## १४१ श्रेष्ठोत्थान

अतिशयेन प्रशस्यं श्रेष्ठम्। इष्ठनि प्रशस्यस्य श्रः (५. ३. ६०)
अतिशयेन स्तुत्यं उत्थानं पौरुषं यस्य।
ब्रह्मा विरिञ्चिद्विजयोर्ऋत्विक्चन्द्रार्कयोगयोः।
ब्रह्म प्रोक्तं तपोऽध्यात्मवेदज्ञानेषु सूरिभिः।
इति विश्वः।

## १४२ स्वव्युत्थानद्रुड्व्युत्थान

स्वस्य आत्मनः व्युत्थानं प्रतिरोधः। तिरस्कारः इति यावत्। तद्रूपः यः द्रुट् द्रोही तस्य व्युत्थानं विरोधाचरणं यस्मात्। स्वेषां स्वीयानां व्युत्थानां स्वतन्त्रता यस्मात्।

स्वतन्त्रता च व्युत्थानम्।

इति त्रिकाण्डशेषः। द्रुहां द्विषां व्युत्थानं विरोधाचरणं यस्मिन् इति वा।

व्युत्थानं स्वैरकरणे विरोधाचरणेऽपि च। (६०-५७)

इति विश्वः॥

## १४३ व्यूढपिधान

व्यूढानि विन्यस्तानि पिधानानि आच्छादनानि अपवृतिमात्रकाणि येन।

व्यूढौ संहतविन्यस्तौ। (२४२४)

इत्यमरः॥

व्यूढः संहतविन्यस्तपृथुलेषु च मेधवत्। (४६-२)

इति विश्वः।

आच्छादने संपिधानम्। (२५८४)

इत्यमरः।

आच्छादनं संपिधाने वस्त्रेऽपवृतिमात्रके।

इति धरणिः। न च क्षितपरिधान इत्यनेन पौनरुक्त्यम्। तेन परिधानाभावस्य अनेन आच्छादकमात्राभावस्य च उक्तत्वात्॥

## १४४ व्यूढनिधान

व्यूढानि पृथुतराणि निधानानि निधयः यस्य।

व्यूढः पृथुतरे ख्यातो न्यस्तसंहतयोरपि।

इति धरणिः॥

## १४५ प्रत्ययधान

प्रत्ययस्य प्रथितत्वस्य धानम्। डुधाञ् धारणपोषणयोः। (३-१०) ल्युट्। पोषणं यस्मात्।

प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु।

प्रथितत्वे च सत्तादावधीनज्ञानयोरपि । ( १२०-६६ )
इति विश्वः ।

## १४६ भ्रमदपदान

भ्रमत् प्रचरन् अपदानं महत् कर्म यस्य ।
अपदानं महत् कर्म ।
इत्यमरः ॥

## १४७ स्वतःप्रमाण

स्वतः स्वस्मादेव । न तु विषयेन्द्रियसंनिकर्षादिरूपगुणजन्यत्वादिना । प्रमाणं प्रमितिः यस्मिन् ॥

## १४८ ग्रावनिपान

ग्रावसु पाषाणेषु निपानं आहावः यस्य ।
आहावस्तु निपानं स्यादुदकूपजलाशये । ( ५१८ )
इत्यमरः ॥

## १४९ स्रुक्प्रज्ञान

स्रुक् यज्ञपात्रविशेषः । प्रज्ञानं बुद्धिः । तद्रूपः । स्रुक्स्वरूपतायाः सहस्रनाम्नि उक्तत्वात् । ज्ञानरूपतायाः वेदे ।
ध्रुवोपभृज्जुहूर्ना तु स्रुचो भेदाः स्रुचः स्त्रियः । ( १५०२ )
प्रज्ञानं बुद्धिचिह्नयोः । ( २५७६ )
इति उभयत्र अमरः । यद्वा स्रुक्कुल्यं तैक्ष्ण्यादिना प्रज्ञानं यस्य इति ॥

## १५० श्रीप्रज्ञान

श्रीः लक्ष्मीः प्रज्ञानं चिह्नं यस्य ॥

## १५१ प्रणयाह्वान

प्रणयः प्रसादः आह्वानं आकारणं यस्य ।
प्रणयः प्रेम्णि विश्रम्भे तथा याञ्चाप्रसादयोः । ( १२०-६५ )
इति विश्वः ।

ह्वतिराकारणाह्वानम्। (३२७)

इत्यमरः॥

## १५२ श्रेयःस्थान

श्रेयसः मुक्तेः स्थानं सन्निवेशः यस्मात्।

श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्। (१७३-४२)

इति मेदिनी।

स्थानं स्थितौ च सादृश्ये सन्निवेशावकाशयोः। (८६-८)

इति विश्वः॥

## १५३ प्रकृतिस्थान।

प्रकृतिः गुणसाम्यम्। तस्य। स्थीयते अत्र स्थानं स्थितिः।

प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः।

योनौ लिङ्गे पौरवर्गे। (६३-१३२)

इति मेदिनी॥

## १५४ प्रकृतिवितान

प्रकृतिः पौरवर्गः। तस्य वितानः विस्तारः यस्मात्।

वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि।

वृत्तभेदावसरयोर्वितानं तुच्छमन्दयोः। (८६-५४)

इति विश्वः॥

## १५५ प्राप्तवितान

प्राप्ताः वितानाः यज्ञाः यम्॥

## १५६ क्षेत्रवितान

क्षेत्रेण शरीरेण वितानं तुच्छम्। शून्यं इति यावत्।

आसारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके। (२१३७)

इत्यमरः॥

## १५७ त्रिदिववितान

त्रिदिवस्य स्वर्गस्य वितानः उल्लोचः। आच्छादकत्वात्। रक्षकः इति यावत्॥

## १५८ क्षीरवितान

क्षीरेण वितानाः क्रतुकर्माणि यस्य। यजमानमूर्तित्वात्॥

## १५९ ज्ञप्तवितान

ज्ञप ज्ञाने ज्ञापने च (१०-८१) ज्ञप्तः ज्ञापितः वितानः वृक्षभेदः येन।

## १६० स्तोत्रवितान

स्तोत्राणां स्तुतिकरणीभूतानां वितानः अवसरः यस्मिन्॥

## १६१ प्रोदितान

प्रकर्षेण उदिताः उक्ताः तानाः येन। तानाः एकोनपञ्चाशत् सङ्गीतशास्त्रे प्रसिद्धाः। तदुक्तम्—

सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः।
ताना एकोनपञ्चाशदित्येतत् स्वरमण्डलम्।

इति॥

## १६२ त्वगधिष्ठान

त्वक् अधिष्ठानं स्थानं यस्य॥

## १६३ प्रपदत्राण

प्रकृष्टं पदं स्थानं येषां ते प्रपदाः इन्द्रादयः। तेषां त्राणं रक्षणं यस्मात्।

पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु। (२५२१)

इत्यमरः॥

## १६४ ग्रहगृह्णान

ग्रहान् सूर्यादीन् गृह्णीते अनुगृह्णीते॥

## १६५ व्यवहितकाणप्रोथदृगाण ।

कण शब्दे ( १. ४७६ ) घञ् । व्यवहितः दूरस्थः यः काणः शब्दः तेन । प्रोथ पर्याप्तौ (१. ६१६) प्रोथन् पर्याप्नुवन् । अण प्राणने (४. ६६) भावे घञ् । ऋचां आणः ऋगाणः ऋक्प्राणभूतः वेदान्तसमूहः यस्मिन् ।

यतो वाचो निवर्तन्ते

इति श्रुतेः । सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्याच्च ॥

## १६६ क्रमजुषमाण

क्रमः शक्तिः । तस्याः जुषमाणः सेवमानः । शेषषष्ठ्या (२. ३. ५०) समासः ।

क्रमः शक्तौ परीपाट्यां क्रमश्चलनकम्पयोः । ( ११०–६ )

इति विश्वः ॥

## १६७ द्रविपाषाण

द्रवः अस्य अस्ति इति द्रवी पाषाणः चन्द्रकान्तमणिः । तद्रूपः । शुभ्रत्वात् निर्मलत्वाच्च ।

## १६८ श्रममुष्णान

श्रमस्य खेदस्य मुष्णानः नाशनशीलः । फलदानेन भक्तखेदनाशकः इति भावः । मुष स्तेये ( ६.७०७;६.५८ ) ताच्छील्ये चानश् (३.२.१२९) ।

श्रमः खेदस्तपःक्रिया । ( २०३ )

इत्यनेकार्थ ध्वनिमञ्जरी ॥

## १६९ श्रमपुष्णान

श्रमः तपःक्रिया । तस्याः पुष्णानः । पूर्ववत् चानश् ॥

## १७० ग्रहसंस्त्यान

ग्रहाणां अनुग्रहाणां संस्त्यानं सम्यग्घनता यस्मिन् ।

ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।
सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः । ( १७९–२ )

इति विश्वः ।

स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि। (८६-७)

इति विश्वः॥

## १७१ द्रवविद्राण

द्रवस्य गतेः विद्राणं पलायनं यस्मात्।

द्रवः प्रद्रावरसयोर्गतौ नर्मणि विद्रवे। (१६२-३)

इति विश्वः॥

## १७२ श्रेयःख्यान

श्रेयः अतिप्रसिद्धं ख्यानं प्रकथनं यस्य। ख्या प्रकथने (२. ५१) ल्युट्॥

## १७३ ग्रन्थिलबाण

ग्रन्थिलाः ग्रन्थियुक्ताः बाणाः शराः यस्य।

ग्रन्थिलो गन्थिसहितः।

इत्यमरः।

बाणः स्यात् केवले काण्डे काण्डावयवदैत्ययोः। (४७-३)

इति विश्वः॥

## १७४ द्वयनिर्माण

द्वयस्य प्रपञ्चस्य निर्माणं निर्मितिः यस्मात्।

निर्माणं निर्मितौ सारे निर्माणं च समञ्जसे। (५२-५६)

इति विश्वः।

## १७५ स्फायितबाण

स्फायी वृद्धौ (१. ५१६) णिजन्तः। स्फायितः वृद्धिं प्रापितः बाणः असुरविशेषः येन॥

## १७६ ध्वनदालानद्विपरुन्धान

ध्वनन्ति आलानानि गजबन्धनानि येषां एतादृशाः ये द्विपाः तेषां रुन्धानः रोधनकर्ता॥

## १७७ प्रशितकृपाण

प्रकर्षेण शितः तीक्ष्णीकृतः कृपाणः खड्गः यस्य। शिञ् निशाने (५-३)

## १७८ क्ष्वेदितबाण

ञिक्ष्विदा स्नेहनमोचनयोः। (१. ७८०; ४. १३४) णिजन्तः। क्ष्वेदिताः मोचिताः बाणाः काण्डावयवाः येन।

## १७९ व्रजपरमान

व्रजे निवहे परं उत्कृष्टं मानं प्रख्यानं यस्य।

गोष्ठाध्वनिवहा व्रजाः। (२३६५)

इत्यमरः।

मानं प्रमाणे प्रख्याने मानश्चित्तोन्नतौ ग्रहे। (८५-६)

इति विश्वः॥

## १८० स्वरसन्धानक्रियाविधानत्रिपुरामानस्रंसनभान

स्वराणां सप्तानां निषादादीनां या सन्धानक्रिया संघट्टनक्रिया तस्याः विधानं यत्नः। तेन यत् त्रिपुरायाः देव्याः मानस्रंसनं मानच्युतिः तया भानं शोभा यस्य।

स्वरो वर्णादिमात्रासु मध्यमादिषु च ध्वनौ।
उदात्तादिष्वपि प्रोक्तः स्वरो नासासमीरणे। (१२५-१)

इति विश्वः।

सन्धानं स्यादभिषवे तथा संघट्टनेऽपि च। (६२-६४)

इति विश्वः।

विधानं विप्रकारेषु गजानां बन्धने विधौ।

इति विश्वः॥

## १८१ द्रविणस्थान

द्रविणस्य काञ्चनस्य स्थानं सादृश्यं यस्य।

द्रविणं काञ्चने वित्ते द्रविणं तु पराक्रमे। (५१-४४)

इति विश्वः॥

## १८२ द्रविणस्थान

द्रविणस्य पराक्रमस्य स्थानं अवकाशः यस्मिन् ॥

## १८३ ध्वस्तविगान

ध्वस्तं अधरीभूतं विशिष्टं गन्धर्वादीनां गानं यस्मात् ॥

## १८४ द्रमितनिमान

द्रम गतौ ( १. ४६४ ) द्रमितं गतं निमानं मूल्यं यस्य ॥

## १८५ क्रमसंस्त्यान

क्रमेण परिपाट्या संस्त्यानानि वेदादिशब्दाः यस्य। स्त्यै ष्ट्यै शब्द-संघातयोः ॥

## १८६ ध्रुतपरिमाण

ध्रु गतौ ( ६. १०७ ) ध्रुतं गतं परिमाणं इयत्ता यस्य ॥

## १८७ श्रुतबहुमान

श्रुतानि श्रुतौ उक्तानि बहूनि मानानि यस्य ॥

## १८८ प्रणतत्राण

प्रणताः त्राणाः रक्षिताः येन।

त्राणं तु त्रायमाणायां रक्षिते रक्षणेऽपि च। ( ४७. ५ )
इति विश्वः ॥

## १८९ स्यन्दितवान

स्यन्दू प्रस्रवणे ( १. ७६८ ) स्यन्दितानि आर्द्रीकृतानि वानानि शुष्काणि येन।

वानं शुष्कफले शुष्के कटे सेवनकर्मणि। ( ८५-५ )
इति विश्वः।

## ११० प्रात्तविषाण

प्रकर्षेण आत्तं गृहीतं विषाणं शृङ्गं येन।

विषाणं तु क्रोडद्विरददन्तयोः।

पशुशृङ्गे। (५२-६४, ६५)

इति विश्वः॥

## १११ प्यायितपान

ओप्यायी वृद्धौ (१. ५१७) णिजन्तः। प्यायितं वर्धितं पानं रक्षणं येन।

पानं पीतौ च रक्षणे। (८५-७)

इति विश्वः॥

## ११२ ध्वजनिःशानभ्यसकृत्

ध्वजस्य खड्गस्य यत् निःशानं तीक्ष्णीकरणम्। शान तेजने (१. १०४४) निर्पूर्वः। भावे घञ्। तेन भ्यसकृत् भयकृत्। शत्रूणां इत्यर्थः। भ्यस भये (१. ६५९) भ्यसनं भ्यसः। घञर्थे कविधानं चिद्वति कः।

ध्वजं श्चिह्ने पताकायां ध्वजः शौण्डिकशेषयोः।

खड्गे च। (३२-३, ४)

इति विश्वः।

## ११३ ध्वानस्तोमितगाण

ध्वानेन शब्देन। स्तोम श्लाघायाम् (१०. ३७७) स्तोमितं श्लाघितं गाणं प्रमथसमूहः यस्य।

गणः समूहे प्रमथे संख्यासैन्यप्रभेदयोः। (४७-२)

इति विश्वः॥

## ११४ ज्वलदभिधान

ज्वल दीप्तौ (१. ८४२, ८८४) ज्वलत् त्रिषु लोकेषु देदीप्यमानं अभिधानं नाम यस्य॥

## १९५ ह्वलदभिमान

ह्वल गतौ ( १. ८४३ )। ह्वलन् गच्छन् अभिमानः हिंसा यस्मात्।
अभिमानः स्मृतो ज्ञाने गर्वे प्रणयहिंसयोः। ( ९८-१६१ )
इति विश्वः॥

## १९६ प्रुन्निर्वाण

प्रुङ् गतौ ( १. १००६ ) क्विप्। प्रुत् गतं निर्वाणं अस्तगमनं यस्मात्।

निर्वाणमस्तगमने गजसज्जनयोरपि।
अपवर्गे च। ( ५२-५६, ५७ )

इति विश्वः॥

## १९७ क्रमितश्राण

क्रमितं प्रवर्तितं श्राणं दानं येन। क्रमेः णिजन्तात् क्तः। श्रण दाने ( १. ८३५, १०. ४२ ) घञ्॥

## १९८ क्षरितद्राण

क्षरितं गलितं द्राणं कुत्सा यस्मात्। द्रा कुत्सायां गतौ ( २. ४५ )

## १९९ क्ष्वेडप्सानस्पृहितध्यान

क्ष्वेडस्य विषस्य। प्सा भक्षणे ( २. ४६ ) प्सानं भक्षणम्। तेन। स्पृह ईप्सायाम् ( १०. ३०५ ) स्पृहितं स्पृहाविषयीकृतं ध्यानं येन॥

## २०० स्थिरसापानव्यानसमान-स्फुडितोदानभ्राजिप्राण

स्थिराः निश्चलाः। अपानेन सहिताः सापानाः। व्यानः च समानः च। स्फुड संवरणे ( ६. ९७ ) स्फुडितः संवृतः च असौ उदानः च। भ्राजी। ग्रह्यादित्वात् ( ३. १. १३४ ) णिनिः। दीप्तः च असौ प्राणः च। एते पञ्च वायवः यस्य। कर्मधारयगर्भितः द्वन्द्वः। तद्गर्भित कर्मधारयः। तद्गर्भितः बहुव्रीहिः।

स्थिरा भूमौ शालपर्ण्यां स्थिरो निश्चलमोक्षयोः। (१३२-८७)
इति विश्वः।

प्राणो हृन्मारुते वाले काव्यजीवेऽनिले बले।
वाच्यवत्पूरिते प्राणं प्राणाश्चासुषु कीर्तिताः। (४७-५, ६)
इति विश्वः॥

## २०१ ज्ञेयप्राण

ज्ञेयः प्राणः काव्यजीवः यस्मात्॥

## २०२ श्लोणविदानक्षमनिस्वान

श्लोणृ संघाते (१. ४८५) घञ्। श्लोणः संघातः। तस्य निदानं छेदनम्। दा प्लवने। ल्युट्। तत्र क्षमः समर्थः निस्वानः शब्दः यस्य।
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु। (२६२०)
इत्यमरः॥

## २०३ स्वरुनिर्माण

स्वरुः वज्रम्। तद्वत् निर्माणं सारः यस्मात्।
स्वरुर्वज्रेऽध्वरे बाणे यूपखण्डेऽपि च स्वरुः। (१३१-७२)
इति विश्वः॥

## २०४ स्मयविश्राण

स्मयः अद्भुतः। तस्य विशिष्टं श्राणं पाकः यस्मिन्। श्रै पाके (१. ६६८) ल्युट्।
स्मयो गर्वेऽद्भुते योगे गातव्ये गायनेऽपि च। (११५. ५)
इति विश्वः॥

## २०५ ख्यापितदान

ख्यापितं प्रसिद्धीकृतं दानं शुद्धिः येन। दैप् शोधने (१. ६७१) ल्युट्।
दानं गजमदे त्यागे पालनच्छेदशुद्धिषु। (८८-६)
इति विश्वः॥

## २०६ द्रमदभिमान

द्रमन् गच्छन् अभिमानः गर्वः यस्मात् ॥

## २०७ त्रखदभिमान

त्रख गतौ (१. १४८) त्रखन् गच्छन् अभिमानः हिंसा यस्मात् ॥

## २०८ स्पृहाभिमान

स्पृहा इच्छा। अभिमानं ज्ञानम्। ते नित्यं स्तः अस्य। अर्शआद्यच् (५. २. १२७)

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः।

इति नित्यार्थे ॥

## २०९ ग्रहाभिमान

ग्रहाः रणोद्यमाः। तेषु अभिमानः प्रणयः यस्य ॥

## २१० स्तोकखगान

स्तोकः अल्पः यः खगः पक्षी चातकः तं आनयति जीवयति।

स्तोकोऽल्पे चातके। (४–२६)

इति विश्वः ॥

## २११ ध्रुवसन्तान

ध्रुवः विष्णुः सन्तानः अपत्यं यस्य।

## २१२ ध्रुवसन्तान

ध्रुवः योगः सन्तानः सन्ततिः। तद्रूपः। कर्मधारयः ॥

## २१३ ध्रुवविदधान

ध्रुवस्य वस्तुभेदस्य विधत्ते विदधानः कर्ता ॥

## २१४ ध्रुवपचमान

ध्रुवं निश्चयेन पचमानः पाचकः ॥

## २१५ ध्रुवजुहुराण

ध्रुवे खे जुहुराणः चन्द्रमाः ॥

## २१६ ध्रुववृधसान

ध्रुवाः नित्याः वृधसानाः मानवाः यस्मात् ।

ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे ।
वसुयोगभिदोः पुंसि ध्रुवं खेऽजस्रतर्कयोः ।
स्त्रीमूर्वाढ्योः शालपर्ण्यां गीतस्रुग्भेदयोस्त्रिषु ।
स्थिरे नित्ये निश्चले च ध्रुवं क्लीबं प्रकीर्तितम् । (१५८-१३, १४)

इति मेदिनी। ध्रुव स्थैर्ये (६. १०७) इगुपध (३. १. १३५) इति कः। यद्वा ध्रु स्थैर्ये (१. ९९०) अच्। कुटादित्वात् (१. २. १) ङित्वम्। उवङ्॥

## २१७ स्वमञ्जसान

स्वस्य धनस्य मञ्जसानः मेघ इव ।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने । (२७५८)

इत्यमरः ॥

## २१८ ध्रुवसहसान

ध्रुवः औत्तानपादिः। सहसानः यज्ञः। तद्रूपः। कर्मधारयः॥

## २१९ ध्रुवयुञ्जान

ध्रुवं अजस्रं युञ्जानः योगं कुर्वाणः ॥

## २२० ध्रुवमीशान व्याचक्षाण

ध्रुवे तर्के हे ईशान व्याचक्षाण व्याख्यानकारिन् ।

## २२१ त्रिःपवमान

त्रिः वारत्रयम्। पूङ् पवने (१. १०१५) पवते पवमानः ॥

## २२२ प्रसंस्तवान

प्रकर्षेण संस्तवानः वाग्मी ॥

## २२३ ध्रुवजरसान

ध्रुवः हरः। जरसानः पुरुषः आत्मा। सांख्ये ज्ञः। कर्मधारयः॥

## २२४ स्वव्यवधानप्रतिसन्धानस्वारभमाण

स्वस्य आत्मनः व्यवधानं विस्मरणम्। अथ च प्रतिसन्धानं स्मरणम्। ते सुतरां आरभते॥

## २२५ क्षमशवसान

क्षमः हितः शवसानः पन्था यस्य॥

## २२६ प्रणयगृणान

प्रणयस्य प्रेम्णः गृणानः। गॄ निगरणे। उपदेष्टा।

## २२७ प्रणयबुधान

प्रणयः याच्ञा। तस्य बुधानः बोद्धा।
बुधानः पण्डिते गुरौ। (६०. ६३)
इति विश्वः॥

## २२८ प्रणयदृशान

प्रणयेन विश्रम्भेण दृशानः लोकपालः।
प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपि। (१२०-६५)
इति विश्वः।

## २२९ प्रप्लवमान

प्रकर्षेण प्लवते गच्छति सर्वत्र॥

## २३० प्रक्रममाणध्रुवयजमानप्रतिलभमान

प्रक्रममाणः प्रारभमाणः ध्रुवानां शङ्कूनां यज्ञस्थानां यजमानानां यज्ञकारिणां च प्रतिलभमानः प्राप्नुवन्। शेषषष्ठ्या (२. ३. ५०) समासः। ततः कर्मधारयः॥

२३१ प्रसमिन्धानप्रमन्दसानव्याजुहूवान

प्रकर्षेण सम्यक् इन्धे असौ प्रसमिन्धानः। तादृक् यः प्रकृष्टः मन्दसानः अग्निः तत्र विशेषेण समन्तात् जुह्वते ॥

२३२ द्रुघण

द्रुः संसारवृक्षः हन्यते अनेन इति द्रुघणः। करणेऽयोविद्रुषु (३. ३. ८२) इति हन्तेः करणे अप् घनादेशश्च। पूर्वपदात् (८. ४. ३) इति णत्वम् ॥

२३३ युधान

युधानः योद्धा। युधिबुधिदृशः किच्च इत्यानच् ॥

२३४ व्यपहृतभारभ्रमसंभार

व्यपहृताः नाशिताः भाराः भ्रमसंभाराः अज्ञानसमूहाश्च येन। द्वन्द्वगर्भितः बहुव्रीहिः।

भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि। (११०-३)

इति विश्वः।

२३५ त्वष्टविकार

त्वक्षू तनूकरणे (१. ६८६) ऊदित्वात् वेट्। त्वष्टाः तनूकृताः विकाराः येन।

परिणामो विकारो द्वे समे विकृतिविक्रिये। (२२८०)

इत्यमरः ॥

२३६ स्खलितनिकार

स्खलिताः भ्रष्टाः निकाराः परिभवाः यस्मात्।

निकारः स्यात् परिभवे धान्यस्य किरणेऽपि च। (१३९-१७०)

इति विश्वः ॥

२३७ स्वर्गद्वार

स्वर्गस्य द्वारं अभ्युपायः।

द्वारं पुनर्निर्गमनेऽभ्युपाये। (१२७-२३)

इति विश्वः ॥

## २३८ प्रलयस्फारस्फुरदाकार

प्रलये प्रलयकाले स्फारः विकटः। स्फर संचलने (६. ६५) स्फरन् स्फुरन् आकारः यस्य।

स्फारः स्याद्विकटे स्फारः शफरादेश्च बुद्बुदे। (१२६-२१)

इति विश्व.।

आकाराविङ्गिताकृती। (२६६०)

इत्यमरः॥

## २३९ प्रथमोऽकारश्वयदधिकारच्छन्दःकार

प्रथमः ओंकारः येषाम्। श्वयन् वर्धमानः अधिकारः येषाम्। ईदृशानि यानि छन्दांसि तानि करोति।

छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः। (१७१. २२)

इति मेदिनी॥

## २४० स्थितिसंस्कार

स्थितिं स्थानमात्रं संस्करोति॥

## २४१ भ्रष्टाहार

भ्रष्टः गतः आहारः यस्य। योगित्वात्॥

## २४२ त्विण्नीहार

त्विषा नीहारः तुहिनतुल्यः। शुभ्रत्वात्॥

## २४३ त्रिपदविवार

त्रयाणां पदानां समाहारः त्रिपदं विवृणोति त्रिविक्रमावतारेण विस्तारयति। हरिहरयोरैक्यात्॥

## २४४ क्षिप्तोद्गारव्यापृतहार

क्षिप्तः उद्गारः फूत्कारः येन। तादृशं व्यापृतं व्याप्तं हारं हरीणां सर्पाणां समूहः यस्मिन्।

हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ।

चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः।
इत्यनेकार्थः॥

## २४५ स्वभ्यवहारश्रमपरिहार

सुष्ठु अभ्यवहारेण भक्ष्येण श्रमं परिहरति। भक्तानां इत्यर्थः॥

## २४६ क्षेत्रियहार

क्षेत्रियः असाध्यः व्याधिः। तमपि हरति।
क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च।
अन्यदेहचिकित्सार्हेऽसाध्यरोगे च जानते। (१२०-७२)
इति विश्वः॥

## २४७ ज्ञाव्यवहार

ज्ञया बुद्ध्या व्यवहारः यस्मिन्॥

## २४८ स्वैरविहार

स्वैरं स्वेच्छया विहारः क्रीडा यस्य॥

## २४९ स्थायुकहार

लषपतपदस्था (३. २. १५४) इत्युकञ्। स्थायुकः स्थितिशीलः हारः मुक्तावलिः यस्मिन्।
हारो मुक्तावली। (१२८२)
इत्यमरः॥

## २५० द्रुणदभिचार

तुदादिः। द्रुणन्तः गच्छन्तः अभिचाराः हिंसाकर्माणि यस्मात्।
हिंसाकर्माभिचारः स्यात्। (२२८७)
इत्यमरः॥

## २५१ क्वथितविचार

क्वथ निष्पाके (१. ८६६) क्वथितः परिपक्वः विचारः यस्य॥

## २५२ व्यपगतपार

विशेषेण अपगतः पारः परतटः। अर्थात् अन्तः यस्य।
पारः परतटे प्रान्ते पारः पोत्रीपरागयोः। ( १२६-१६ )
इति विश्वः॥

## २५३ द्रवसंचार

द्रवः सुखरूपः संचारः प्रचारः यस्य।
द्रवः प्रद्रावरसयोर्गतौ नर्मणि विद्रवे। ( १६२-३ )
इति विश्वः॥

## २५४ स्थावरचारध्रजितसार

स्थावराः स्थितिशीलाः। तत्सहिताः चरा एव चाराः। स्वार्थेऽण्। मध्यमपदलोपी समासः। तेषु ध्रजितः प्रापितः सारः स्थिरांशः येन। ध्रजि गतौ ( १. २३३ ) णिजन्तः।
सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु। ( २६७७ )
इत्यमरः॥

## २५५ भ्रीसंसार

भ्री भये ( ९. ३४ ) भ्रिणाति इति भ्रीः भयवान् संसारः यस्मात्॥

## २५६ श्रुतिकासारव्यक्तविसार

श्रुतिरूपः यः कासारः सरसी तस्यां व्यक्तः स्फुटः विसारः मत्स्यः।
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः।
विसारः शकुली च। ( ५००, ५०१ )
इत्यमरः।
व्यक्तः स्फुटमनीषिणोः ( ५१-३५ )
इति विश्वः॥

## २५७ स्वरविस्तार

स्वराणां मन्त्राणां विस्तारः यस्मात्। तत्स्वरूपः वा।
स्वरो वर्णादिमात्रासु मध्यमादिषु च ध्वनौ।

उदात्तादिष्वपि प्रोक्तः स्वरो नासासमीरणे । ( १२५–६ )

इति विश्वः ॥

## २५८ स्मृतवरनारप्रतिनिस्तार

स्मृतं स्मरणम् । तेन वरं उत्कृष्टम् । नराणां समूहः नारम् । तस्य प्रतिनिस्तारः निर्वाहः यस्मात् ।

वरोऽभीष्टे देवतादेर्वरो जामातृषिड्गयोः ।
श्रेष्ठेऽन्यवत्परिवृतौ वरं काश्मीरजे मतम् । ( १२५–७ )

इति विश्वः ॥

## २५९ क्रत्ववतार

क्रतूनां यज्ञानां अवतारः ।

क्रतुर्यज्ञे मुनेर्भिदि । ( ५८–१८ )

इति विश्वः ॥

## २६० प्रतिकान्तारक्षणिकासार

प्रतिकान्तारं प्रतिवनम् । क्षणः अस्य अस्ति इति क्षणिकः । अत इनिठनौ ( ५. २. ११५ ) इति ठन् । सोत्सव आसारः प्रसारः यस्य ।

कान्तारमुपसर्गादौ वने दुर्गमवर्त्मनि ।
इक्षुप्रभेदे कान्तारः । ( १३८. १६५ )

इति विश्वः ।

निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः । ( २४२६ )

इत्यमरः ।

आसारः स्यात् प्रसरणे वेगवर्षे सुहृद्बले । ( १३८–१६७ )

इति विश्वः ॥

## २६१ क्षपणकमार

क्षपणकान् बौद्धविशेषान् मारयति ॥

## २६२ प्लोषितमार

प्लोषितः दाहितः वह्निद्वारा मारः कन्दर्पः येन । प्लुषु दाहे ( ४. ८, १०७ ) णिजन्तः ॥

## २६३ प्रौढकुमारप्रसुतकुमार

प्रौढः श्रेष्ठः कुमारः कौ पृथिव्यां मारयति दुष्टान्। एतादृशः प्रसुतः उत्पादितः कुमारः स्वामिकार्तिकेयः येन।

कुमारो बालके स्कन्दे युवराजेऽश्वचारके।
शुके च वरुणाद्रौ च कुमारं जात्यकाञ्चने। (१३९-१७४)

इति विश्वः॥

## २६४ प्रभुतागार

प्रभुता ऐश्वर्यम्। तस्या अगारं गृहम्॥

## २६५ प्रगुशृङ्गार

प्रकृष्टा गौः पृथ्वी येषां ते प्रगवः राजानः। तेषां शृङ्गारः शोभाधायकः॥

## २६६ श्रीमदुदारव्योमोदार

श्रीः बुद्धिः। तद्वान्। उदारः महान्। व्योम्नः जलस्य उदारः दाता।

उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्। (१३८-१६८)

इति विश्वः॥

## २६७ क्ष्माधरधार

क्ष्मायाः पृथ्व्याः धराः धारकाः। तान् शेषादीन् अपि धरति॥

## २६८ क्रीडितदार

क्रीडिताः विहारयुक्ताः कृताः दाराः पार्वती येन। क्रीडृ विहारे (१. ३७३)॥

## २६९ स्रस्तविदारप्रतिभटदार

स्रस्तः गतः विदारः रणः येषां तान् प्रतिभटान् प्रतिकूलभटान् दारयति। दृ विदारणे (६. २३)

विदारो दारणे रणे। (१३९-१६९)

इति विश्वः॥

## २७० प्रमुदिततारश्रद्धाधारस्मरदुद्धार

प्रमुदिताः प्रहृष्टाः। तार. अत्युच्चैःस्वरः। श्रद्धा भक्तिः। ते धरन्ति। तादृशाः ये स्मरन्तः जनाः तान् उद्धरति।

तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके।
तारं च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम्।
नृत्ताक्षिमध्ययोस्तारा सुग्रीवगुरुयोषितोः।
बुद्धदेव्यां मता तारा। (१२६-१८, १६, २०)

इति विश्वः॥

## २७१ श्रितजलधार

श्रिता आश्रिता जलधारा गङ्गाप्रवाहः येन॥

## २७२ क्लीबविवार

क्लीबाः अपौरुषाः। तान् निवारयति पूजकत्वेन न अङ्गीकरोति॥

## २७३ स्वःप्रावार

स्वः स्वर्गस्य प्रावारः उत्तरासंगः। आच्छादकः इति यावत्।

द्वौ प्रावारोत्तरासंगौ। (१३०८)

इत्यमरः।

## २७४ व्रजिततुषार

व्रजितः प्राप्तः तुषारः हिमं येन। हिमालयवासित्वात्॥

## २७५ प्रोषितजार

प्रोषितः प्रवासं प्राप्तः। अर्थात् गतः। जारः जरणं जीर्णता यस्य। जॄ वयोहानौ। (६. २४, १०. २७२) घञ्॥

## २७६ ध्रजिज्वार

ध्रजि गतौ। (१. २३२) सर्वधातुभ्य इन्। ध्रजिः गतः ज्वारः रोगः यस्मात्। ज्वर रोगे। (१. ८१३) घञ्॥

## २७७ प्रेक्षितवारस्त्रीगणहार

प्रेक्षितः दृष्टः वारस्त्रीणां गणिकानां नृत्यकर्त्रीणां गणस्य समूहस्य हारः माल्यविशेषः येन ।

इष्टकादिचयो हारो हारो मुक्तागणः स्मृतः ।
हारो माल्यविशेषः स्याद्धारश्च क्षेत्रमुच्यते । ( १२ )

इत्यनेकार्थध्वनिमञ्जरी ॥

## २७८ प्रत्ययहार

प्रत्ययः मन्त्रः । तस्य हारः क्षेत्रम् ।

प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु ।
प्रथितत्वे च मन्त्रादौ चाथ धीज्ञानयोरपि ॥ ( १२०-६६ )

इति विश्वः ॥

## २७९ क्षयदभिसार

क्षयन् नश्यन् अभिसारः परस्त्रीगमनानुकूलव्यापारः यस्य ॥

## २८० क्षयसंवार

क्षयः रोगः । तं संवृणोति नाशयति ॥

## २८१ श्रीघनसार

श्रिया वेषेण घनसारः कर्पूरसदृशः । शुभ्रत्वात् ॥

## २८२ प्रतिसिरसार

प्रतिसरः मन्त्रः सारः बलं यस्य ।

भवेत् प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे ।
व्रणशुद्धौ च भूपृष्ठे पुंसि न स्त्री तु मण्डने ।
आरक्षे करसूत्रे च नियोज्येऽप्यन्यलिङ्गकः । (१४२-२७६, २७७)

इति मेदिनी ।

सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने ।
न्याय्ये क्लीबं त्रिषु वरे । ( १२६-६५, ६६ )

इति मेदिनी ॥

## २८३ प्रतिसरसार

प्रतिसराः माल्यानि साराः धनानि यस्य ॥

## २८४ प्रतिसरसार

प्रतिसरः नियोज्यः सारः न्याय्यः यस्य ॥

## २८५ प्रतिसरसार

प्रतिसरः कङ्कणं सारः वरं श्रेष्ठं यस्य ॥

## २८६ प्रतिसरसारप्रतिसरसारप्रतिसरसार

प्रतिसरः मण्डलम्। तद्रूपाः साराः जनाः। तेषां प्रतिसरः चमूपृष्ठम्। तस्य साराः मज्ञानः। प्रतिसरः करसूत्रम्। सारः बलम्। एते प्रियत्वेन सन्ति अस्य। अर्शआद्यच्। (५. २. १२७)

न्याय्ये च नीरे च जने च सारम्। (१२७–२३)

इति विश्वः ॥

## २८७ स्वःप्राकार

स्वः सुखविशेषस्य प्राकारः आवृतिः। आवरकः इति यावत् ॥

## २८८ छपुरस्कार

छं निर्मलं पुरस्करोति अङ्गीकरोति ॥

## २८९ छतिरस्कार

छं तरलं तिरस्करोति दूरीकरोति ॥

## २९० छनमस्कार

छः छेदकः पापानां नमस्कारः यस्य।

निर्मलं छं समाख्यातं तरलं छं प्रकीर्तितम्।
छेदके छः समाख्यातो विद्वद्भिः शब्दकोविदैः। (१२, १३)

इति एकाक्षरकोशः ॥

२९१ क्षपुरस्कार

क्षस्य वपुषः पुरस्कारः संस्कारः यस्मात्।

क्षः क्षेत्रे वपुषि प्रोक्तं क्षः क्षमायां तथाम्बरे।

इति विश्वः॥

२९२ स्वकफूत्कारक्षविनिष्कार

स्व एव स्वकः आत्मीयः यः फूत्कारः तेन क्षाणां राक्षसानां विनिष्कारः निराकरणं यस्मात्।

क्षः क्षेत्रे रजसि प्रोक्तो बुधैः क्षः शब्दशासने। (३७)

इति एकाक्षरकोशः॥

२९३ प्रसमुत्सार

प्रकर्षेण समुत्सारयति सर्वान्। प्रलयकारित्वात् इत्यर्थः॥

२९४ प्रसप्रकार

प्रकर्षेण। प्रकाराः भेदाः विशेषाः देवतिर्यङ्मनुष्यादयः। तै सहितः।

प्रकारौ भेदसादृश्ये। (२६६०)

इत्यमरः॥

२९५ छलत्प्रकारप्रतिहृतशार

छलमिव आचरति इति छलत्प्रकारः प्रकृष्टकृतिः येषां तेषां प्रतिहृताः शाराः वायवः। अर्थात् प्राणाः। येन।

शारः शबलवातयोः। (१२६. २०)

इति विश्वः॥

२९६ क्षणगणशार

क्षणानि व्यापारस्थितयः। तासां गणः। तेन शारः शबलः मिश्रितः। सर्वदा निर्व्यापारः इति यावत्॥

२९७ श्विदलंकार

टुओश्वि गतिवृद्ध्योः (१. १०५९) अन्येभ्योऽपि दृश्यते (३. २. १७८) इति क्विप्। श्वयति इति श्वित् वर्धमानः अलंकारः यस्य॥

## २९८ ध्वदहंकार

ध्वंसति इति ध्वन् नष्टः अहंकारः यस्य ॥

## २९९ स्रन्निर्धार

स्रंसति इति स्रत् गतः निर्धारः निश्चयः यस्मात्। स्रंसु ध्वंसु अधःपतने ( १. ७९०, ७९१ )

## ३०० द्रुमसहकार

द्रुमेषु वृक्षेषु सहकारः आम्रवृक्षः। तद्रूपः।

द्रुमो वृक्षे पुराणेऽर्के।

इत्यनेकार्थध्वनिमञ्जरी ॥

## ३०१ द्रुमदुर्वार

द्रुमः सूर्यः। तद्वत् दुर्वारः अनिवार्यः ॥

## ३०२ श्रीह्रींकारक्रींक्रेंकारहूंहुंकार

एतद्वर्णस्वरूपः। तन्निरूपणं च आगमशास्त्रे। विस्तरभयात् न लिख्यते ॥

## ३०३ स्वरुवरवार

स्वरुषु बाणेषु वराः श्रेष्ठाः। तेषां वारः समूहः यस्य।

वारः सूर्यादिदिवसे द्वारे दिवसवृन्दयोः।

कुब्जवृक्षे हरे वारो वारं मद्यस्य भाजने ( १२६. १७, १८ )

इति विश्वः ॥

## ३०४ त्सरुपरिवार

त्सरुः खड्गमुष्टिः। तेन युक्तः परिवारः परिजनः यस्य। मध्यमपदलोपिसमासः।

त्सरुः खड्गादिमुष्टौ स्यात् ( १६४७ )।

इत्यमरः।

परिवारः परिजने खड्गकोशे परिच्छदे।

इति धरणिः ॥

## ३०५ स्वरुपरिवार

स्वरुः यूपखण्डः परिवारः परिच्छदः यस्य ।

## ३०६ प्रस्तरवार

प्रस्तराणां यज्ञानां वारः संभक्तिः यस्मिन् । वृङ् संभक्तौ (९. ३८) घञ् ।

संस्तरप्रस्तरावेतौ प्रस्तराध्वरयोरपि ।
मणिपाषाणयोश्चापि यथाक्रममुदीरितौ ( १३४. ११५ )

इति विश्वः ॥

## ३०७ प्रस्तरवार

प्रस्तराः पाषाणाः । अर्थात् मणयः । तेषां वारः द्वारं यस्य ॥

## ३०८ स्वरपरिवार

स्वराः उदात्तादयः । तेषां परिवारः कोशः । परिवारशब्दस्य खड्ग-कोशवाचित्वम् । समुदाये दृष्टाः शब्दाः क्वचित् अवयवेऽपि वर्तन्ते इति न्यायात् ॥

## ३०९ श्रीप्रस्तार

श्रियं सरस्वतीं वर्णमात्ररूपां प्रस्तारयति । पिङ्गलरूपत्वात् ॥

## ३१० श्रीदोदार

श्रियं त्रिवर्गसंपदं ददति ते श्रीदाः । तेषु उदारः दक्षिणः ॥

## ३११ ग्रहिलाकारस्पृड्व्याहार

ग्रहिलाः निर्बन्धवन्तः आकाराः इङ्गितानि तेषाम् । स्पृशति इति स्पृट् व्याहारः उक्तिः यस्य ।

व्याहार उक्तिर्लपितम् । ( ३१३ )

इत्यमरः ॥

## ३१२ स्तृतगुणतार

स्तृताः विस्तृताः गुणाः एव ताराः हाराः यस्य ॥

## ३१३ स्फुण्टिततार

स्फुटि परिहासे। स्फुण्टितं परिहसितं तारं रजतं येन॥

## ३१४ द्योतिततार

द्योतिताः प्रकाशिताः ताराः नक्षत्राणि येन॥

## ३१५ क्षमसंतार

क्षमानां हर्षक्षयाणां सम्यक् तारः तरणं यस्मात्॥

## ३१६ क्लेशाङ्गारश्रन्थितवार

क्लेशाः पञ्च क्लेशाः अविद्यास्मितारागद्वेषमोहरूपाः। ते एव अङ्गाराः। दाहकत्वात्। तेषां श्रन्थितः। श्रथि शैथिल्ये (१. ३५) शिथिलितः वारः अवसरः येन॥

## ३१७ स्फोडकवार

स्फुड संवरणे (६. ६७) स्फोडकः संवरणकारकः वारः द्वारः॥

## ३१८ हुतकेदार

हुड् अपनयने। हुताः अपनीताः केदाराः पर्वताः येन। प्रलयकारित्वात् इति भावः।

केदारः पर्वते शम्भौ क्षेत्रभेदालवालयोः (१३८. १६८)

इति विश्वः॥

## ३१९ ज्वलनकडारप्रदर

ज्वलनः अग्निः। तद्वत् कडाराः पिङ्गलाः प्रदराः केशाः यस्य। अथवा ज्वलन इति पृथक् संबोधनम्। ज्वलन अग्निरूप। कडाराः पिङ्गलाः प्रदराः केशाः यस्य इति पृथक्॥

## ३२० मदारप्रदरमदार

मदाराः धूर्ताः। तेषाम्। दॄ हिंसायाम्। ॠदोरप् (३. ३. ५७) प्रपूर्वः। प्रदरः भङ्गः। तत्र मदारः हस्ती।

मदारो द्विरदे धूर्ते (१३९-१६१)

इति विश्वः ॥

## ३२१ द्योतिकडार

द्योतः अस्ति एषां द्योतिनः प्रकाशिनः कडाराः दासाः यस्य।

प्रकाशो द्योत आतपः (२. ३.)

इत्यमरः ॥

## ३२२ प्रदरकुठारप्रदरकुठार

प्रदरः नारीरुक्। कुठारं कपटम्। अनयोः प्रदरः बाणः। कुठारः छेदनकारी शस्त्रविशेषः। तद्रूप ॥

## ३२३ स्वादुकुठार

स्वादु प्रियं कुठारं मैथुनं यस्य।

प्रदारो भङ्गनारीरुग्बाणा अस्त्राः कचा अपि

कुठारं मैथुने विद्यात् कुठारं कपटेऽपि च (१३९-१७७)

इति विश्वः ॥

## ३२४ स्तम्भितदास

स्तम्भिताः विश्वासिताः दासाः येन। स्तम्भु विश्वासे (१. ७६४) णिजन्तः।

दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि (१७४. ३)

इति विश्वः।

## ३२५ स्थितिकैलास

स्थीयते अस्मिन् इति स्थितिः। एतादृक् कैलासः यस्य ॥

## ३२६ स्तम्भितहास

स्तम्भिताः प्रमादिताः। तान् हसति। स्तम्भु प्रमादे। (१. ४२०) णिजन्तः ॥

## ३२७ प्रेमनिवास

प्रेम्णः स्नेहस्य निवासः स्थानम्।

## ३२८ त्रोटितपाश

त्रोटितः छेदितः पाशः बन्धनं येन ।

पाशः पक्ष्यादिबन्धने ।

इत्यमरः ॥

## ३२९ व्यथितह्रास

व्यथ भयसंचलनयोः (१. ८०१) व्यथितः भीतः ह्रासः क्षैण्यं यस्मात् ॥

## ३३० क्रान्तविवास

क्रान्तः प्राप्तः विवासः समाप्तिः । अर्थात् आरब्धस्य । येन ॥

## ३३१ क्लमिकीनाश

क्लमी ग्लानियुक्तः कीनाशः यमः यस्मात् । क्लमु ग्लानौ (४. ९८) शमित्यष्टाभ्यो घिनुण् (३. २. १४१)

कीनाशः कर्षके क्षुद्रे कृतान्तपशुघातिनोः (१६९-२१)

इति विश्वः ।

## ३३२ क्रथनविलास

क्रथ हिंसायाम् (१. ८३८) क्रथनं हिंसनं विलासः भावः यस्य ।

विलासो भावलीलयोः (१७५-२२)

इति विश्वः ।

## ३३३ ह्मलदभ्यासस्फूर्च्छितरास

ह्मल चलने (१. ८४४) ह्मलन् चलन् यः अभ्यासः पौनःपुन्यं तेन स्फूर्च्छितः विस्तारितः रासः क्रीडा येन। स्फुर्च्छा विस्तृतौ (१. २२८) णिजन्तात् क्तः । रास क्रीडायाम् । घञ् ॥

## ३३४ द्राडितवाश

द्राडृ ध्राडृ शोषणालमर्थयोः । द्राडितः शुष्कः वाशः इच्छा यस्य । वश कान्तौ (२. ७०) घञ् । कान्तिः इह इच्छा ॥

## ३३५ स्थलदवकाश

ष्थल स्थाने (१. ८८६) स्थलन् तिष्ठन् अवकाशः आकाशः यस्मिन् ॥

## ३३६ भ्रेषिनिकाश

भ्रेष्ट गतौ (१. ६३२) सर्वधातुभ्यः इन्। भ्रेषिः गच्छन् निकाशः उपमा यस्य।

निकाशो निश्चये तुल्ये। (१६६-२१)

इति विश्वः ॥

## ३३७ स्त्यायितभास

स्त्यै ष्ट्यै शब्दसंघातयोः (१. ६५६) णिजन्तः। स्त्यायिताः संघातं प्रापिताः भासाः दीप्तयः येन ॥

## ३३८ क्रोशितभास

क्रुश आह्वाने (१. ९०६) णिजन्तः। क्रोशिताः आह्वायिताः भासाः गृध्राः येन। भैरवरूपित्वात्।

भासो भासि समाख्यातो गोष्ठे कुक्कुटगृध्रयोः (१७४-२)

इति विश्वः ॥

## ३३९ ह्वरणग्रास

ह्वृ कौटिल्ये (१. ९७८) ह्वरणं कौटिल्यं ग्रसति भक्षयति। ग्रसु अदने (१. ६६१) कर्मण्यण् ॥

## ३४० म्नातन्यास

म्ना अभ्यासे (१. ९७६) म्नातः अभ्यस्तः न्यासः मातृकादिन्यासः येन ॥

## ३४१ क्षुरसङ्काश

क्षुरेण शस्त्रविशेषेण सङ्काशः सदृशः। तीक्ष्णत्वात् ॥

## ३४२ स्रवितप्रास

स्रु गतौ (१. ६८७) स्रवणं स्रवः। सः संजातः यस्य स्रवितः निष्फलीकृतः प्रासः कुन्तः। अर्थात् शत्रूणाम्। येन।

प्रासस्तु कुन्तः (१६५४)

इत्यमरः॥

## ३४३ स्थायिश्वास

स्थायिनः श्वासाः यस्य। स्थायी इत्यत्र ग्रह्यादित्वात् (३.१.१३४) णिनिः॥

## ३४४ ध्यातविकाश

ध्यातेन ध्यानेन विकाशः प्रकाशः यस्य॥

## ३४५ स्नातविभास

स्नातं अस्मिन् इति स्नातः। अर्शआद्यच् (५. २. १२७) विभासः तीर्थविशेषः येन॥

## ३४६ स्थापितवास

स्थापितः वासः व्यवस्था येन।

वासो गृहे व्यवस्थाने वासः स्यादाढरूषके (१७४-७)

इति विश्वः॥

## ३४७ ध्मातहुताश

ध्मा शब्दाग्निसंयोगयोः (१. ९७३) ध्मातः प्रज्वालितः हुताशः अग्निः येन॥

## ३४८ प्रातबुधाश

प्रा पूरणे (२. ५२) प्राता पूर्णीकृता बुधानां पण्डितानां आशा वाञ्छा येन॥

## ३४९ स्वयंनिराश

स्वयं आत्मना निराशः इच्छारहितः॥

## ३५० प्रायितरास

प्रीङ् प्रीतौ (४. ३६) प्रायितः प्रीतिविषयीकृतः रस एव रासः स्वादः येन ॥

## ३५१ त्यक्तोच्छ्वासस्पर्धिविनाश

त्यक्तः यः उच्छ्वासः विनासः तेन स्पर्धिनां शत्रूणां विनाशो यस्मात् ॥

## ३५२ क्रूरत्रास

क्रूरान् नृशंसान् त्रासयति। त्रसी उद्वेगे (४. १०) णिजन्तात् कर्मण्यण्।

क्रूरस्तु कठिने घोरे नृशंसे त्वभिधेयवत् (१२७-२५)

इति विश्वः ॥

## ३५३ श्यायितकास

श्यैङ् गतौ (१. १०१२) णिजन्तः। श्यायितः गमितः कासः रोगविशेषः येन ॥

## ३५४ म्रदितश्वास

म्रद मर्दने (१. ८०४) म्रदितः नाशितः श्वासः रोगविशेषः येन ॥

## ३५५ स्यमिताश्वास

स्यम वितर्के (१०. १५४) णिजन्तात् क्तः। स्यमितः तर्कं प्रापितः आश्वासः व्यसनं येन।

आश्वासो निर्वृतौ मतः।
आख्यायिकापरिच्छेदेऽप्यभ्यासे व्यसनेऽन्तके (१७५-२१)

इति विश्वः ॥

## ३५६ ग्रस्तोज्जास

ग्रस्तान् व्याध्यादिना उज्जासयति मोचयति। जसु मोक्षणे (४. १०२) णिजन्तः। उत्पूर्वः ॥

## ३५७ स्वादितघासस्वतनुम्लास

स्वाद् आस्वादने ( १. २८ ) स्वादितः घासः तृणविशेषः येन स बलीवर्दः नन्दी। तेन स्वस्य तनुं शरीरं म्लासयति। म्लासृ दीप्तौ। णिजन्तः॥

## ३५८ त्रौकितमास

त्रौकृ गतौ ( १. ६६ ) त्रौकिताः गमिताः मासाः कालभेदाः येन। चिरजीवित्वात्॥

## ३५९ श्वेतितवास

श्वेतितं श्वेतं वासः वस्त्रं यस्य॥

## ३६० परप्रकाश

परः उत्कृष्टः प्रकाशः प्रहासः यस्य।

## ३६१ स्वपत्प्रकाश

स्वपन्ति ते स्वपन्तः प्रकाशाः आतपाः। अर्थात् तेजांसि। यस्मिन्।

प्रकाशोऽतिप्रसिद्धे स्यात् प्रहासातपयोः स्फुटे ( १६६-२० )
इति विश्वः॥

## ३६२ त्विड्जितकाश

त्विषा जिताः काशाः तृणविशेषाः येन।

काशस्तृणे स्यात् क्षवथौ वाराणस्यां तु काश्यपे ( १६८-७ )
इति विश्वः॥

## ३६३ क्रथितायास

क्रथ हिंसायाम् ( १. ८३८ ) क्रथितः दूरीकृतः फलदानेन आयासः परिश्रमः येन॥

## ३६४ श्लथहल्लास

श्लथः शिथिलः हृल्लासः रोगविशेषः यस्मात्॥

## ३६५ द्विट्कृकलास

द्विषः शत्रवः कृकलासाः सरटाः इव यस्य ॥

## ३६६ भ्रूव्यत्यासत्रपितव्यास

भ्रुवः व्यत्यासेन त्रपितः लज्जितः व्यासः मुनिः येन। त्रपूष् लज्जायाम् (१. ३६६) णिजन्तः। घटादित्वात् मित्वेन ह्रस्वः।

व्यासो मुनौ स्याद्विस्तारे (१७४. ७)

इति विश्वः ॥

## ३६७ त्रुफितव्यास

त्रुफ हिंसायाम् (१. ४३७) त्रुफितः नाशितः व्यासः विस्तारः येन। नाशकत्वात् ॥

## ३६८ स्तरणह्रास

स्तृञ् आच्छादने (५. ६) स्तरणं आच्छादनम्। तस्य ह्रासः क्षयः यस्य। दिगम्बरत्वात् ॥

## ३६९ प्रियविश्वास

प्रियः विश्वासः प्रत्ययः यस्य ॥

## ३७० व्रणितपलाश

व्रणाः संजाताः येषां ते व्रणिताः मारिताः। पलं मांसं अश्नन्ति ते पलाशाः व्याघ्रादयः येन। मृगयाप्रियत्वात् ॥

## ३७१ छन्नपलाश

छद अपवारणे (१०. २६०) छन्नाः अपवारिताः पलाशाः राक्षसाः येन।

पलाशः किंशुके साट्यां हरिते राक्षसेऽपि च।

पत्रे पलाशम् (१६६-२३, २४)

इति विश्वः ॥

## ३७२ छातपलाश

छो छेदने (४. ३८) छातानि पलाशानि पत्राणि क्रीडार्थं येन ॥

## ३७३ प्रेप्सितकाशश्रोण

प्रकर्षेण ईप्सितः। काश्यां भवाः काशाः लोकाः। तेषां श्रोणः संघातः यस्य। श्रोणृ संघाते (१. ४८४) घञ्।

## ३७४ पलाश

पलाशः ब्रह्मवृत्तः। तत्स्वरूपः ॥

## ३७५ घणितव्याश

घण शब्दे। घणितुं योग्यः घणितव्यः। वाच्यः इत्यर्थः। आशः। आं ब्रह्माणं श्यति तनूकरोति इत्याशः।

आकारो ब्रह्मणि प्रोक्तः।

इत्येकाक्षरकोशः। शो तनूकरणे (४. ३७) आतोऽनुपसर्गे कः (३. २. ३) ॥

## ३७६ स्तनितखलाशद्रोहिनिरास

स्तनिताः शब्दयुक्ताः खलाः दुष्टाः। शः श्रेष्ठः। तद्भिन्नाः अशाः। ईदृशाः ये द्रोहिणः शत्रवः तेषां निरासः निराकरणं यस्मात्।

शकारः कथितः श्रेष्ठः।

इत्यनेकार्थः ॥

## ३७७ क्रूरपरासस्निग्धाभ्यासस्तुक्

क्रूरेभ्यः परे अन्ये। न विद्यते सः कोपः येषां ते असाः। स्निग्धाः स्नेहयुक्ताः। तेषु अभ्यासेन संमुखोपवेशेन स्तोचते प्रसीदति। आस उपवेशने (२. ११) अभिपूर्वः। घञ्। ष्टुच प्रसादे (१. १८८) क्विप्।

सः कोपे वारणे शस्ये तथा शूलिनि कीर्तितः।

इत्यनेकार्थः (३५) ॥

## ३७८ संन्यास

सतः साधून् नितरां आ समन्ताद्भावेन असति स्वीयत्वेन आदत्ते। अस गतिदीप्त्यादानेषु (१. ६३४) ॥

## ३७९ स्वःपतिशास

स्वःपतिं इन्द्रं शास्ति ॥

## ३८० प्रभाप्रकाश

प्रभाभिः प्रकाशते ॥

## ३८१ व्याप्तदशाश

व्याप्ताः दशसंख्याकाः आशाः दिशः येन ॥

## ३८२ द्विष्टदशास

द्विष्टान् अप्रीतान् द्यति खण्डयति इति द्विष्टदः। दो अवखण्डने (४. ४०) कः। तादृशः शासः खड्गः यस्य ॥

## ३८३ क्लिष्टदशास

क्लिष्टाः क्लेशयुक्ताः। तेषां याः शन्यादिदशाः ताः स्यति नाशयति। षो अन्तकर्मणि (४. ३६)॥

## ३८४ प्रायितलास

प्रकर्षेण अयितः प्राप्तः लासः नृत्यं येन। अय गतौ (१. ५०३, ६३५) क्तः। लस शिल्पयोगे (१०. १८६) घञ् ॥

## ३८५ स्वरितविभास

स्वः स्वर्गं इताः प्राप्ताः स्वरिताः। तान् विशेषेण भासयति दीपयति ॥

## ३८६ भ्रेजितनास

भ्रेजृ दीप्तौ (१. १६३) भ्रेजिता शोभिता नासा द्वारोर्ध्वदारु यस्य

नासा तु नासिकायां स्यान्नासा द्वारोर्ध्वदारुणि (१७४. ११

इति विश्वः ॥

## ३८७ ग्लपितपिपास

ग्लै हर्षक्षये (१. ९५२) ग्लास्नावनुवमां च (धा. पा. १. ८६८; पा. ६. ४. १२) इति मित्वम्। ग्लपिता ग्लानिं प्रापिता पिपासा पातुं इच्छा येन ॥

## ३८८ प्रहृतयियास

प्रकर्षेण हृता यियासा गन्तुं इच्छा येन। स्थाणुः इत्यर्थः ॥

## ३८९ स्यूतसमास

स्यूतः मिलितः समासः संक्षेपः यस्य। अणिमसिद्धिसंयुक्त इत्यर्थः ॥

## ३९० स्नपितविपाश

स्नपितं स्नानप्रयोजकः व्यापारः। तत् यस्याः सा स्नपिता इति अर्शआद्यच् (५. २. १२७) तादृशी विपाशा नदी यस्मात् ॥

## ३९१ ह्रसिताकाश

ह्रसितः ह्रस्वीकृतः आकाशः येन ॥

## ३९२ स्रूकार्पास

स्रिवु गतिशोषणयोः (४. ३) क्विप्। ज्वरत्वर (६. ४. २०) इति ऊठ्। स्रीव्यति इति स्रूः गतम्। कर्पासस्य विकारः कार्पासं वस्त्रं यस्मात्। दिगम्बरत्वात् ॥

## ३९३ ज्युतदुर्वास

ज्युङ् गतौ (१. १००५) ज्युतः गतः दुष्टः वासः वासना यस्मात् ॥

## ३९४ क्ष्णुद्दिध्यास

क्ष्णु तेजने (२-२८) क्विप्। क्ष्णौति इति क्ष्णुत् उत्तेजयित्री दिध्यासा ध्यानेच्छा यस्य ॥

## ३९५ स्रग्दिग्वास

स्रग्रूपाः दिशः वस्ते आच्छादयति ॥

## ३९६ व्रजदधिवास

व्रजन् गच्छन् अधिवासः धूपनादिभिः संस्कारः यम् ।
अधिवासो निवासे च संस्कारे धूपनादिभिः । ( १७८-५० )
इति विश्वः ॥

## ३९७ द्युसदधिवास

दिवि सीदन्ति इति द्युसदः देवाः । तेष्वधिवासः निवासः यस्य ॥

## ३९८ ह्रीच्छितदाश

ह्रीच्छ लज्जायाम् ( १. २२५ ) ह्रीच्छिताः लज्जिताः । दाशृ दाने ( १. ६३१ ) पचाद्यच् ( ३. १. १३४ ) दाशाः दातारः यस्मात् ॥

## ३९९ क्षोटितदाश

क्षोट क्षेपे ( १०. ३२६ ) क्षोटिताः क्षिप्ताः दाशाः कैवर्ताः येन । दशति मत्स्यान् इति दाशः । दंसेष्टटनौ न आ च (उ. ५-१५, १६) यद्वा दाश्यते मूल्यं अस्मै । दाशृ दाने ( १-६३१ ) घञ् ।
शालो झषे धीवर एव दाशः ।
इति शब्दभेदः ।
कैवर्तभृत्ययोर्दासो दासी वाणा च चेटिका ।
इति रुद्रात् दन्त्यान्तोऽपि ॥

## ४०० प्रचितचकास

प्रचितः संचितः चकासः दीप्तिः येन । चकासृ दीप्तौ ( २. ६५ ) घञ् ॥

## ४०१ प्रीणितदास

प्रीणिताः तर्पिताः दासाः दानपात्राणि येन ॥

## ४०२ ध्रजितस्पाश

ध्रज गतौ ( १. २३२ ) ध्रजितः गतः स्पाशः बाधा यस्मात्। स्पश बाधने ( १. ९३६ ) घञ् ॥

## ४०३ ध्वजितस्पाश

ध्वजिताः गताः स्पशाः एव स्पाशाः चाराः यस्मात्। सर्वज्ञत्वात्। ध्वज गतौ ( १. २३८ )

अपसर्पश्चरः स्पशः ( १४९३ )

इत्यमरः ॥

## ४०४ ध्वाञ्जितकास

ध्वञ्जितः गतः कासः कुत्सितशब्दः यस्मात्। ध्वजि गतौ (१. २३६) क्तः। कासृ शब्दकुत्सायाम् ( १. ६५४ ) घञ्।

## ४०५ द्रवदितिहास

द्रु गतौ ( १. ६६२ ) द्रवन्तः प्रचरन्तः इतिहासाः पुरावृत्तानि यस्य ॥

## ४०६ द्युद्दुर्वासःकृतपरिहासप्रकरविलास

द्यु अभिगमने (२. ३१ ) क्विप्। द्युत् अभिगतः यः दुर्वासाः ऋषिः तस्य कृतः यः परिहासः तस्य प्रकरः समूहः। तद्रूप एव विलासः लीला यस्य। कृष्णशिवयोरभेदात् ॥

## ४०७ प्रद्रुतकास

प्रद्रुतः प्रचलितः कासः शातनं यस्मात्। कस गतिशासनयोः ( २. १४ ) घञ् ॥

## ४०८ ह्लादकरास

ह्लादकः सुखकरः रासः ध्वनिः यस्य।

रासः कोलाहले ध्वनौ।
भाषाशृङ्खलके रासः ( १७४-३, ४ )

इति विश्वः।

